रूपाणि पञ्चतन्मात्राणीत्युच्यन्ते यदुक्तम्—गुणाविशिष्टास्तन्मात्रपदयोजिताः इति। ततश्च सूक्ष्मेभ्यः कारणरूपेभ्यः पञ्चभूतानि अस्मदादिबाह्येन्द्रियपरिच्छेद्यगुणत्वात् स्थूलानि जातानीत्याह। भूतानीति। तानि चाकाशादीनि शब्दाद्येकोत्तरगुणानि भवन्ति। शब्दैकगुणमाकाशम्। शब्दस्पर्शगुणो वायुः। शब्दस्पर्शरूपगुणोऽग्निः। शब्दस्पर्शरूपरसगुणमम्भः। शब्दादिगन्धान्तपञ्चका पृथिवी इति। यच्छ्रूयते—शब्दाद्येकोत्तरगुणमवकाशादिवृत्तिमदित्यादि। ननु वैशेषिकादिभिराकाशविशेषगुणः शब्द इष्यते। तन्न। आश्रयादन्यत्राप्युपलब्धेः। यदुक्तमस्य हेतोः प्रत्यक्षागमविरुद्धत्वेन कालात्ययापदिष्टत्वात् इति। तथा ह्याकाशे तावत्प्रतिशब्दः श्रूयते वायोः सकसकादिः। अग्नेर्धमधमादिः। चलचलादिकमम्भसि। कटकटादिः पृथिव्यामिति। उक्तं च श्रीमन्मृगेन्द्रे।

इति पञ्चसु शब्दोऽयं स्पर्शो भूतचतुष्टये।
अशीतोष्णौ महीवाय्वोः शीतोष्णौ वारितेजसोः।
भास्वदग्नौ जले शुक्लं क्षितौ शुक्लाद्यनेकधा।
रूपं त्रिषु रसोऽम्भः सुमधुरः षड्विधः क्षितौ।
गन्धं क्षितावसुरभिः सुरभिश्च मतो बुधैः॥ इति॥६१॥

**अवकाशव्यूहनपाकसंग्रहधारणं क्रमादेषाम्।**
**व्यापारा[2] भूतानां व्योमादीनां समुद्दिष्टा[3]ः॥ ६२॥**

इन आकाशादि पञ्च भूतों का व्यापार क्रमशः स्थानप्रदान, अनेकप्रकार से धारण अथवा एकत्रीकरण, पकाना, संयोजन तथा धारण हैं॥ ६२॥ १३॥

### तात्पर्यदीपिका

अथ पञ्चभूतानाम् व्यापारमाह—अवकाश इति।

अवकाशः स्थानप्रदानं व्योम्नो व्यापारः, भेदकारणत्वात्। व्यूहनं विविधवहनं वायोर्व्यापारः पुञ्जीकरणं वा। पाचनं परिपाककरणं तेजसो व्यापारः। संग्रहः संश्लेषणमपां व्यापारः, क्लेदनं वा। धारणं सम्भरणं पृथिव्या व्यापार इति। तदुक्तम्—

---

१. पाचन। २. व्यापारो। ३. समुद्दिष्टः।

"व्योम्नोऽवकाशदानं व्यूहो वायोर्हविर्भुजः पाकः ।
संग्रहणमपां धारणमुर्व्याः सर्वात्मना वृत्तिः ॥"

आकाशमत्र परमं भूतं, तच्छब्दगुणं, शब्दतन्मात्राद् उत्पन्नत्वात् । यथा मृदुत्पन्नो घटो मृद्गुणः, कार्पासादुत्पन्नः तन्तुः कार्पासगुणः, एवं शब्दादुत्पन्न आकाशः शब्दगुण इति । तदिदं भूतम् अवश्याश्रयणीयम् । अन्यथा मूर्तवस्तुनो गमनागमनवृद्धिसंरोहणव्यायामादिसर्वव्यापाराभावप्रसङ्गादिति । तदुक्तं पारमेश्वरे—

"आकाशं शब्दतन्मात्रादवकाशकलक्षणम् ।
व्यक्तं व्यक्तिकरं विप्र! पृथक् संस्थानसिद्धये ॥" इति ।

तदेकममूर्तं घटकुम्भमठकूपाद्युपाधिभेदाद् अनेकभेदभिन्नम् । तस्य वर्णमनिर्देश्यं शुद्धस्फटिकसन्निभमिति । अपरे चन्द्रमण्डलाकारं मण्डलमिति । तदुक्तम्—

"तद्बाह्ये तु भवेद् व्योम भूतत्त्वे संव्यवस्थितम् ।
अप्रतर्क्यमविज्ञेयं मोक्षस्थानमिवापरम् ॥" इति ।

अस्य षडध्वव्याप्तिः—शकारो वर्णः । पिङ्गापिङ्गेत्यादि द्वे पदे । नेत्रपञ्चार्णौ मन्त्रौ । आकाशात्मकं तत्त्वम् । वस्त्रापदाद्यष्टौ भुवनानि । शान्त्यतीता कला । नीरूपस्पर्शवान् वायुः । स शब्दस्पर्शगुणः । 'आकाशाद् वायु'रित्यागमबलात् परमाणोरुत्पत्तिर्बाधिता । स त्रिविधः शरीरं प्राणो विषयश्चेति । यातनादेः शरीरस्य वायवीयत्वं तदाधिक्याद् न तावन्मात्रत्वात् । प्राणः शरीरस्थोऽन्तःकरणसामान्यवृत्तिरूपः । तदुक्तम्—

"स्वालक्षण्या वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।
सामान्यकरणवृत्तिः प्राणाद्याः वायवः पञ्च ॥" इति ।
सां० का० २९

इतरो विषयवायुः । तदुक्तं मातङ्गे—

'येनाविष्टं जगत् कृत्स्नं स्फुरते बुद्धिमेति च ।
यत्र बद्धा विमानानां कोटयोऽष्टौ च विंशतिः ॥
भ्रमन्ति चक्रवत् सोऽयं वायुः प्राणभृतां वरः ।" इति ।
"अस्याञ्जननिभं वर्णं वृत्तं षड्बिन्दुमण्डलम् ।"

तदुक्तम्—

'तद्बाह्ये वायुतत्त्वं तु भिन्नाञ्जनसमप्रभम्।
घर्घरारावमुखरं महाबलजनाकुलम् ॥" इति।

अस्य षडध्वव्याप्तिः—षकारो वर्णः। शब्दशब्देत्यादि द्वे पदे। कवचपञ्चार्णौ मन्त्रौ। वाय्वात्मकं तत्त्वम्। गयाद्यष्टौ भुवनानि। शान्तिः कला। भास्वररूपं तेजः। तद् द्विविधम् आभ्यन्तरं बाह्यं चेति' शरीरान्तर्वर्तिमुक्ताहारपाकसाधनम् आभ्यन्तरम्, इतरद् बाह्यम्। तच्च द्विविधं शरीरं विषय इति। देवर्षीणां देहस्तैजसः।

"तैजसानि शरीराणि भवन्त्यद्भुतकर्मणाम्।" इति

वचनात्। इतरत् सूर्यसोमवह्निविद्युदादि। तस्य वर्णं विद्युन्निभम्। तदुक्तम्—

"तेजस्तत्त्वं तु तद्बाह्ये विद्युत्कोटिसमप्रभम्।
मेघस्तनितनिर्घोषं तेजोरूपं जनाकुलम्।"

मण्डलं स्वस्तिकलाञ्छितं त्रिकोणम्। अस्य षडध्वव्याप्तिः—शिवशर्वेति पदम्। शिखापञ्चार्णौ मन्त्रौ। तैजसं तत्त्वम्। श्रीशैलाद्यष्टौ भुवनानि। विद्या कला। स्वतोद्रवा आपः शब्दस्पर्शरूपरसगुणाः। तत्र स्वकीयो रसगुणः। त्रयोऽन्ये सङ्करजाः। तदुक्तं पारमेश्वरे—

"रसः स्वाख्योऽत्र बोद्धव्यस्त्रयोऽन्ये संकरोद्भवाः।" इति।

तद् द्विविधं शरीरं विषय इति। शरीरं वरुणलोकस्थानं विषयभूतमितरद्, भोग्यत्वात्। स्फटिकवर्णं चैतत्। तदुक्तं चन्द्रज्ञाने—

"पृथिवीतत्त्वमाक्रम्य जलं दशगुणं बहिः।
ब्रह्माण्डाधारभूतं तु शुद्धस्फटिकसन्निभम् ॥" इति।

अस्य षडध्वव्याप्तिः—हकारो वर्णः। सर्वदादि द्वे पदे। शिरःपञ्चार्णौ मन्त्रौ। अबात्मकं तत्त्वम्। अमरेशाद्यष्टौ भुवनानि। प्रतिष्ठा कला। गन्धवती पृथिवी, पञ्चगुणा च। तदुक्तं पारमेश्वरे—

"संक्षुब्धाद् गन्धतन्मात्राद् गुणैः पञ्चभिरन्विता।
स्वाख्योऽस्या गन्ध एवोक्तश्चत्वारोऽन्येऽनुषङ्गजाः ॥
सारं तावत् पराकाष्ठां नखदन्तास्थिजातयः ॥

सा चेयं शरीरं विषय इति द्विविधा। शरीरं च स्थावरजङ्गमात्मना द्विविधम्। स्थावरं तृणादिवृक्षान्तम्। जङ्गमं चतुर्विधं जरायु-

जमण्डजं स्वेदजमयोनिजं चेति । मनुष्यपशुमृगाणां जरायुजम् । पक्षिसरीसृपाणामण्डजम् । यूकमत्कुणपतङ्गादीनां स्वेदजम् । भुवनेशदेवर्षीणाम् अयोनिजं चेति । ब्रह्माण्डतदन्तर्वर्तिसप्तद्वीपपातालाष्टाविंशतिकोटिनरकतावत्संख्यविमानादयः पुराणशतेतिहाससिद्धा विषयाः, भोग्यत्वादिति । अण्डात्मकं क्षितितत्त्वं शतकोटियोजनविस्तृतम् । तदुक्तं शैवरहस्ये—

"पार्थिवमन्तिमतत्त्वं ब्रह्माण्डात्मकमखण्डमपि तावत् ।
विस्तारायामाभ्यामुक्तं शतकोटियोजनम् ॥"

इति । मतङ्गपारमेश्वरे च—

"एवं कोटिशतं पूर्णं पार्थिवं तत्त्वमत्र तु ।
अस्माद् दशगुणं तोयं तोयादग्निस्ततोऽनिलः ॥
वायोः खं खादहङ्कारस्तस्माच्च परतो महान् ।
महतः परतो ज्ञेयं गुणानां त्रितयं मुने !
गुणत्रयात् प्रधानाख्यं तत्त्वं दशगुणोत्तरम् ।
शतोत्तरगुणानि स्युर्मायान्तान्यपि रागतः ॥
सहस्रवृद्धं विद्याख्यं लक्षमैशं ततस्ततः ।
कोट्या विवर्धितं भूयः शिवतत्त्वं प्रकीर्तितम् ॥
अनन्तरमनन्तं स्यादप्रमेयं च शाश्वतम् ।" इति ।

एतत् क्षितितत्त्वं स्वर्णनिभम् । तदुक्तं चन्द्रज्ञाने—

"सौवर्णं पृथिवीतत्त्वं सूर्यकोटिसमप्रभम् ।
कुक्कुटाण्डनिभं चैतद् ब्रह्माण्डं परिकीर्तितम् ॥" इति ।

चतुरस्रं वज्रलाञ्छितं चन्द्रमण्डलम् ।

"ब्रह्माद्या देवता ज्ञेयाः क्ष्मादीनां पञ्च वै क्रमात् ।
शिवादिपृथिव्यन्तेषु तत्त्वेषु सकलेष्वपि ॥
भुवनानि चतुर्विंशत्यधिकं तु शतद्वयम् ।"

अस्याः षडध्वव्याप्तिः—क्षकारो वर्णः । शिवायों नमो नम इति पदम् । हृदयपञ्चार्णौ मन्त्रौ । पार्थिवं तत्त्वम् । कालाग्न्यादिभद्रकाल्यन्तान्यष्टोत्तरशतभुवनानि । निवृत्तिः कला इति ॥ १३ ॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायां शुद्धाशुद्धविनिर्णयः
चतुर्थः परिच्छेदः

---

### वृत्तिः

अथैषां व्यापारमाह—अवकाशेति ।

अवकाशदानमाकाशस्य व्यापारः । व्यूहनमवयवघटनं वायोः । पाकोऽग्नेः संग्रहोऽवष्टम्भोऽम्भसः । धारणं भूमेः इति । अत्र चाकाशस्य अवकाशमात्रादन्यत्वमनित्यत्वं च अस्माभिर्मृगेन्द्रवृत्तिदीपिकायां विस्तरेण दर्शितम् । इति ततोऽवधार्यम् ।। ६२ ।।

**कार्यमिदं दशधा यत् तत्करणैः कार्यते समाविश्य ।**
**करणान्यसमर्थत्वात्कार्यं संश्रित्य चेष्टन्ते ॥६३॥**

ये जो दस प्रकार के ( सूक्ष्मतन्मात्र तथा स्थूलभूत ) कार्य हैं, उनमें समाविष्ट होकर ( अर्थात् उनका आश्रय लेकर ) इन्द्रियाँ कार्य करती हैं। स्वयं समर्थ न होने के कारण इन्द्रियाँ कार्यों का आश्रय लेकर ही व्यापार करती हैं ।। ६३ ।। १ ।।

### तात्पर्यदीपिका

## अथ पञ्चमः परिच्छेदः

अथैवं गुणसाम्यात्मकात् प्रधानादुत्पन्नानि त्रयोविंशतितत्त्वानि कार्यकारणात्मना द्विविधानि । तत्र तन्मात्रापञ्चकभूतपञ्चकात्मना दशविधं कार्यम् । बाह्याभ्यन्तरभेदेन त्रयोदशविधं कारणम् । तयोर्विनियोगं दर्शयति—कार्यम् इति ।

अयमभिप्रायः—दशविधं यत् कार्यं तत् करणैः कार्यते स्वीक्रियते गृह्यते इति यावत् । कार्यं शरीरं सूक्ष्मस्थूलात्मना दशविधम् । समाविश्य संश्रित्य । आश्रयं विना तेषां चेष्टितुमशक्यत्वादित्यर्थः । अथवा कार्यं विषयम् । दशविधमिदम् । तत् करणैः विषयीक्रियते । समाविश्य सम्बध्येति ।। १ ।।

### वृत्तिः

अथैषां दशानां कार्यत्वमिन्द्रियाधारत्वं चाह—कार्यमिति ।

कार्यात्मकमेतत् तन्मात्रभूतात्मकं तत्त्वदशकं करणैराविश्य चेष्टां कार्यते । तानि चाविभुत्वात् कार्यमधिष्ठायैव चेष्टन्ते । इति तत्त्वसंग्रहेऽप्युक्तम् । एतत्कार्यं दशधाकरणैराविश्य कार्यते चेष्टाम् । अविभुत्वात् कारणानि तु कार्यमधिष्ठाय चेष्टन्ते इति । ननु भूतान्येवोभयवादिसि-

द्धानि इन्द्रियाधाराणि भवन्तु किमन्तर्गडुना निरर्थकेन तन्मात्रपञ्चकेन, तदयुक्तम् । स्थूलसूक्ष्मतया तानि इन्द्रियाधाराणि स्थितानीति श्रूयन्ते । यदुक्तम् श्रीमन्मृगेन्द्रे—'तन्मात्राणीह घटवन्महाभूतानि लेपवत्' इति ।। ६३ ।।

**पञ्चानामाद्यानां चिद्रूपतयान्वयः परेषां तु ।**
**मायाद्यानां द्वेधा सप्तानां कीर्तितः शैवे ।। ६४ ।।**
**अव्यक्तप्रभृतीनां गुणैश्च सुखदुःखमोहरूपतया ।**
**अन्वय इह निखिलानां दशके ह्यन्ते विशेषोऽयम् ।।६५।।**

शैवशास्त्र में प्रथम पाँच ( शिव, शक्ति, सदाशिव, ईश्वर, शुद्धाविद्या ) चिद्रूप से युक्त कहे गये है, इनके अतिरिक्त माया आदि सातों का ( चिद-चिद्रूप ) द्विविध अन्वय है ।। ६४ ।। २ ।।

अव्यक्त आदि सभी शेष तत्त्वों का गुणों के साथ सुख, दुःख और मोह रूपों में सम्बन्ध है । अन्तिम दस ( पञ्चतन्मात्र और पञ्चमहाभूत ) में यह ( आगे कही जाने वाली ) विशेषता है । ।। ६५ ।। ३ ।।

## तात्पर्यदीपिका

तदेवं षट्त्रिंशत्तत्त्वानां स्वरूपमभिधाय साम्प्रतं शुद्धानीत्यादिना सूचितं शुद्धत्वं शुद्धाशुद्धत्वम् अशुद्धत्वं च प्रतिपादयितुं तद्धेतुमाह— पञ्चानाम् इति ।

अयमभिप्रायः-एकजातिसमावेशोऽन्वयः समानरूपत्वम् ऐकात्म्य-मिति यावत् । तत्र पञ्चानाम् आद्यानां शिवशक्तिसदाशिवेश्वरविद्या-तत्त्वानां चिद्रूपतयाऽन्वयः । तेन कारणेन तेषां शुद्धत्वं, ज्ञानरूपस्य अज्ञानमलसम्बन्धासंभवात् । मायाकालनियतिकलाविद्यारागपुरुषाणां सप्तानां द्वेधा चिदचिद्रूपतयाऽन्वयः । चिदनुविद्धाचिद्रूपत्वाद् मायादीनां पुरुषव्यतिरिक्तानां द्वेधा समन्वयः । पुरुषस्य चित्स्वभावस्योपाधिकृता-चिद्रूपत्वादिति । यथा जपासन्निधानात् स्वतः शुद्धस्य स्फटिकस्य रागः, तथा पुरुषस्य अप्युपाधिधर्माध्यारोपाद् अचिद्रूपत्वमिति । तेन सप्तानां मायादीनां शुद्धाशुद्धत्वमिति । अव्यक्तादीनां बाह्यतया चित्सम्बन्धरहि-तानां सुखदुःखमोहरूपत्वेन गुणैरन्वयः । तेन तेषां केवलाशुद्धत्व-मिति ।। २–३ ।।

१. स्तु ।

## वृत्तिः

इत्थं तत्त्वलक्षणमुक्त्वा केषु केषाङ्कथमन्वय इत्यत आह। पञ्चाना-मिति—

इयं गौः इयं गौरित्याद्यनुवृत्तिप्रत्ययहेतुरन्वयः। स चास्मिन् शैवे शास्त्रे व्यक्तिव्यतिरिक्तजात्यनभ्युपगमेऽपि कथं चित्सादृश्यमात्रेणोच्यते। ततश्चाद्यानां शुद्धानां पञ्चानां तत्त्वानां सर्वज्ञत्वसर्वकर्तृत्वोपोद्वलनहेतु-त्वात् चिद्रूपतया। चिदुपकारितयाऽन्वयः। न तु तेषां चैतन्याभ्युपगमो युक्तः। अचेतनत्वस्य प्रागेव साधितत्वात्। परेषां तु अशुद्धानां माया-द्यानां पुंस्त्वान्तानां किञ्चिज्ज्ञत्वाद्युपोद्वलनहेतुत्वाच्चिदुपकारितया सूक्ष्मदेहद्वारेण गुणसम्बन्धात् सुखदुःखमोहजनकतया च द्विविधश्चिदचि-दन्वयः॥ ६४॥

अव्यक्तेति—

प्रकृत्यादिपृथिव्यन्तानां गुणसम्बन्धात् सुखदुःखमोहरूपतयाऽन्वयः। दशके ह्यन्तेति॥ ६५॥

**शब्दादि[1]कगुणसाम्ये तुल्यत्वेना[2]न्वयोऽत्र विज्ञेयः।**
**अङ्गाङ्गिभावविहितो भवति विशेषस्तु केषांचित्॥६६॥**

(तन्मात्र तथा पंचभूतों में) शब्दादि गुणों की समानता होने पर इनका अन्वय यहाँ समान रूप से समझना चाहिये, किन्तु कुछ का तो अङ्गाङ्गिभाव-कार्यकारण आदि भावविशेष-अन्वय होता है॥ ६६॥ ४॥

## तात्पर्यदीपिका

अन्ते दशके भूततन्मात्रात्मके वक्ष्यमाणो यो विशेषः स किंलक्षण इत्यत आह—शब्दादेरिति।

शब्दादीनां सगुणत्वसाम्ये सत्यप्यसमतया सम्बन्धो वेदितव्यः। अङ्गाङ्गिभावः कार्यकारणाभावः, तेन विहितः प्रतिपन्नो भावसर्गाख्यो विशेषः केषांचित् कार्यरूपाणां कालाद्यवन्यन्तानां विज्ञेय इति। कार्याणां स्वसाधारणकारणेषु सत्त्वं भावसर्गः। तदुक्तं शैवरहस्ये—

"प्रातिस्विकेषु हेतुषु तत्तत्तत्त्वात्मकस्य सूक्ष्मस्य।
कार्यस्यावस्थानं भावः सत्कार्यवादिमते॥" इति।

१. शब्दादेर्गु। २. तुल्यत्वे चान्वयो।

सोऽयं भावसर्गः कार्यकारणभावेनावगम्यते। तथा हि—कार्यकारणभावसम्बन्धो नासति सम्बन्ध्यन्तरे कार्ये सम्भवतीत्यसतः खरविषाणादेरदर्शनात्। विमतानि कार्याणि कारणेषु सन्त्येव, उत्पत्तिमत्त्वात्। यत् कारणेष्वविद्यमानं न तदुत्पत्तिमत् यथा खरविषाणम्। न च तथैतानि नोत्पत्तिमन्ति। तस्मात् कारणेषु सन्त्येव इति। तथा उपादानकारणस्वीकाराच्च। यदि तिलेषु तैलं न स्यात्, तर्हि तैलार्थिनः सिकतास्विव तिलेष्वपि स्वीकारो न स्यात्। न तदस्ति इति तिलेषु तैलसद्भावसिद्धिः। एतस्मादेव कारणात् सर्वसद्भावात् च सदेवं कार्यम्। यदि कारणेष्वसत् कार्यं जायेत, तर्हि तस्मादेवाखिलकार्यसंभवप्रसङ्गः, असत्त्वस्य सर्वत्राविशेषात्। न च तदस्तीति सदेवोत्पद्यत इति। शक्तात् कारणाच्छक्यकार्यजननाच्च। यदि कारणेष्वविद्यमानं कार्यं जायेत, तर्ह्यशक्तादपि तदुद्भवप्रसङ्गः, असत्त्वे शक्तिकल्पनावैयर्थ्यात्। तथा शक्तेः कार्यसूक्ष्मावस्थारूपत्वाच्च सत् कार्यम्। तथा यद्यसत् कार्यम् अशक्यमपि तदा कार्यं जायेत, कारणस्य शक्तत्वात् न चासति कार्ये तत्रैव शक्तिरिति वक्तुं न शक्यते, असत्त्वेनाविशेषादिति। कारणत्वाच्च सत् कार्यम्। यदि कार्यं कारणे न स्यात् तदास्य कारणत्वमपि न स्यात् इतरसाधारण्यात्। तद् दृष्टमतः सत् कार्यमिति। तदुक्तम्—

> "असदकरणादुपादानग्रहणात् सर्वसंभवाभावात्।
> शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्यम्॥" इति।
>
> सां. का. ९।

न च सत्कार्यवादे कारणवैयर्थ्यप्रसङ्ग इति वाच्यम्। कारणानाम् अभिव्यक्त्यर्थत्वात्। यथावघातदोहनापीडनैः तण्डुलक्षीरतैलानामुत्पत्तिः, तथा कालाद्यवन्यन्ततत्त्वानां तद्विकारभूतघटादीनां चोद्भव इति। विनाशश्च तेषां तिरोभाव एव, नासत्त्वमिति। न चाभिव्यक्तेः अभिव्यक्त्यन्तराभ्युपगमेऽनवस्थेति वाच्यम्। उत्पत्तेरपि समानत्वात् तथा पटोत्पत्तिः स्वकारणसमवायः स्वसत्तासमवायो वा नोत्पद्यते। तथापि तदर्थानि कारकाणि व्यापार्यन्ते। एवं सत एव घटादेः स्वत एवाविर्भावाय कारणापेक्षेति युक्तम्। तदुक्तं भगवता विष्णुना—

> "नासतो विद्यते भावो नाभावो विद्यते सतः" इति।
>
> गीता।२।१६॥

श्री विष्णुपुराणे च—

"तदेतदक्षयं नित्यं जगुर्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥" इति ।

अथवा अङ्गाङ्गिभावविहितः कल्पितो विशेषः, हेतुमत्त्वान्नित्यत्वात् । व्यापित्वसक्रियत्वानेकत्वाश्रितत्वलिङ्गत्वसावयवत्वपरतन्त्रत्वादिधर्मः कालाद्यवन्यन्तानां व्यक्तानां विद्यत इति त्रिगुणत्वाविवेकित्वविषयत्वसामान्यत्वाचेतनत्वप्रसवधर्मित्वान्यव्यक्ताख्यस्य मायातत्त्वस्यापि सन्ति । चिन्मात्रस्य शिवस्य पुंसो हेतुमत्त्वादिकं त्रिगुणत्वादिकं च नास्ति । तयोः कार्यकारणभावविहितयोः कार्यकारणत्वशून्ये पुरुषेऽसंभवादिति केषांचिदेवायं धर्म इति । तदुक्तम्—

"हेतुमदनित्यमव्यापि सक्रियमनेकाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥
त्रिगुणमविवेकि विषयं सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥" इति ।
सां. का. ॥ १०-११ ॥

अथवा अङ्गमचेतनं चेतनार्थत्वात् । तस्याङ्गी चेतनः शेषित्वात् तस्य । तयोर्भावः सम्बन्धः । तद्विपरीतो विशेषः इतरेतराध्यासोऽङ्गाङ्गिभावविहितो विशेष इति । तदुक्तम्—

"तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥"
सां. का. ॥ २० ॥

अथवा अङ्गाङ्गिभावः प्रधानाप्रधानभावः । बुद्धिः प्रधानभूता, पुरुषस्यातिसन्निकृष्टत्वात् । तस्यास्तेनाङ्गित्वम् बाह्येन्द्रियाणि अङ्गानि अप्रधानानि, तत्साध्यत्वात् । तयोर्भावविहितो विशेषः केषाञ्चित् कारणानामस्ति इति । तदुक्तम्—

"एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषात् ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥
सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः ।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥" इति ।
सां. का. ॥ ३६-३७ ॥

तस्मादेव तत्त्वानामुत्पत्तिरिति ॥ ४ ॥

वृत्तिः

कोऽसावित्याह—शब्देति ।

तन्मात्रभूतवर्गयोः शब्दादिगुणसाम्ये कार्यशब्दवाच्यतया तुल्यत्वेन च द्विविधोऽन्वयो विज्ञेयः । एषां च सर्वेषा तत्त्वानां मध्यात्केषांचिद् बिन्दुमायादीनां कारणत्वेनाङ्गितया शक्त्यादीनां कार्यत्वेनाङ्गतया च विशेषो भवतीत्याह—अङ्गाङ्गीति ॥ ६६ ॥

**तत्त्वानां स्थितिरेषा कथिता सृष्टिक्रमेण सर्वेषाम् ।**
**प्रतिलोमं परिणामात् मायायां तानि लीयन्ते ॥६७॥**

यह सभी तत्त्वों की व्यवस्था उत्पत्तिक्रम से कही गयी । ( प्रलयदशा में ) वे अभिव्यक्ति ( उत्पत्ति ) के उलटे क्रम मे माया में विलीन हो जाते हैं ॥ ६७ ॥ ५ ॥

तात्पर्यदीपिका

एवं तत्त्वानां सृष्टिक्रमं स्थितिं चोक्त्वा संहारक्रममाह—तत्त्वानाम् इति ।

एतेषां तत्त्वानामुक्तेन प्रकारेण सृष्टिः स्वे स्वे कारणे स्थितिश्च कथिता । परिणामप्रतिलोमेन मायायां तानि स्वे स्वे कारणे लयं प्राप्य लीयन्त इति ॥ ५ ॥

वृत्तिः

अथ तत्त्वलक्षणमुपसंहरति—तत्त्वानामिति ।

संहारमाह—प्रतिलोममिति । पृथिव्यादेस्तत्त्वगणस्य स्वकारणलयक्रमेण मायायामुपसंहारः ॥ ६७ ॥

**मायायाः परतोऽध्वा शुद्धः शक्तौ निलीयते सकलः ।**
**परमात्मनि सापि शिवे तिष्ठत्यविभागमापन्ना ॥६८॥**

माया से परे सम्पूर्ण शुद्धाध्व ( के तत्त्व ) शक्ति में लीन होते हैं और वह भी ( शक्ति भी ) परमात्मा शिव में अविभक्त रूप में स्थित हो जाती है ॥ ६८ ॥ ६ ॥

तात्पर्यदीपिका

मायायाः परस्ताद् यानि तत्त्वानि तेषां कुत्र लय इत्याशङ्क्याह—मायाया इति ।

मायायाः परतो यस्तत्त्वाध्वा शुद्धाख्यः, स सर्वोऽपि शक्तितत्त्वे

१. सर्वात्मनि ।

लयं याति । सा शक्तिः शिवेनैक्यं प्राप्य तिष्ठति । निलीयत इति, 'आनीदवातं स्वधया तदेकमिति' श्रुतेस्तदवगमात् ।। ६ ।।

**वृत्तिः**

मायाया इति ।

शुद्धविद्यादेस्तु शक्तौ महामायाख्यायाम् । सकलः कालोपबृंहितोऽध्वा शुद्धः संलीयते । तदुक्तमस्माभि :—

'गन्धे भूः सलिलं रसे हुतवहो रूपे मरुत्स्पर्शने
शब्दे स्यात्खमहंकृतौ पुनरिमास्तन्मात्रिकास्तामसे ।
कर्माक्षाणि च राजसे सह मनोबुद्धीन्द्रियैः सात्विके
बुद्धौ तच्च गुणेषु सो गुणगणोऽव्यक्ते लयं गच्छति ।।

तद्रागविद्ये च कलां प्रयान्ति
पुंस्त्वं च कालो नियतिः कला च ।
मायासु विद्येशमसौ स देशं
स शक्तिमेषा शिवमेष बिन्दुः ।। इति ।

तत्र च शिवशब्देन शान्तिकलामस्तकस्थं शान्त्यतीतभुवन-मुच्यते । तदानीं च । परमात्मनीति सा महामाया अपि शब्दात् मलावृतात्मनि चिता माया च शिवे निमित्तभूते अधिष्ठातरि सति परं केवलमात्मन्येव कार्यरूपे विभागरहिता कारणस्वरूपैव तिष्ठति । न तु शिवे अविभागमापन्ना समवायं प्राप्नोतीति व्याख्येयम् तस्याश्चित्-समवाये परिणामित्वादिदोषप्रसङ्गात् । तदुक्तं श्रीमन्मृगेन्द्रे—

'स्वापेऽप्यास्ते बोधयन्बोधयोग्यान्
रोध्यान् रुद्धन् पाचयन् कर्मिकर्म ।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्
पश्यन् सर्वं यद् यथावस्तुजातम् ।। इति ।
तच्च सात्मकमाश्रित्य विश्वमायावतिष्ठते ।
भविनां भवखिन्नानां सर्वभूतहितो यतः ।। इति ।।६८।।

**माया पुरुषः शिव इत्येतत्त्रितयं महार्थसंहारे ।**
**अवशिष्यते पुनस्तत्प्रवर्तते पूर्ववत् सृष्टौ ।। ६९ ।।**

महार्थों ( काल से लेकर अवनि-पर्यन्त तत्त्वों ) का प्रलय होने पर माया, पुरुष और शिव ये तीन तत्त्व शेष रह जाते हैं ( नष्ट नहीं होते ), और पुनः सृष्टि-निमित्त वही तीनो पहले की भाँति प्रवृत्त होते हैं ।। ६९ ।। ७ ।।

### तात्पर्यदीपिका

ननु संहारदशायां सकलस्य विनाशेन पुनरुत्पादासंभव इत्याशङ्क्याह—माया इति ।

महार्थानां कालाद्यवन्यन्ततत्त्वानां शुद्धानां च विद्येशसदाशिवानां संहारे मायापुरुषशिवानां जगत्कारणानां सद्भावात् पुनरपि जगदुत्पत्तिः संभवत्येव पूर्ववदिति ॥ ७ ॥

### वृत्तिः

ततश्च मायेति—

अयं त्रैलोक्यान्तस्य मध्यमस्य च गुणान्तस्य प्रलयस्य सद्भावान्महाप्रलयो ह्यशेषसंहारः तत्र विद्येशानामपि मोक्षप्राप्तेः । मायादिकं त्रितयमवशिष्यते । तत्र मायाशब्देन मन्त्रोच्चारान्मायामहामायात्मकमुपादानद्वयमुच्यते । पुरुषशब्देन जात्येकवचनेन मलयुक्ताः सर्वे बद्धात्मानः शिवशब्देन समवेतशक्तियुक्तः शिवः मुक्तात्मानश्च । पुनः संहारान्ते तच्छिवादिवस्तुसृष्ट्यर्थं प्रागुक्तवत्प्रवर्तते ॥ ६९ ॥

**संसारे खिन्नानां निखिलानां प्राणिनां प्रभुः कृपया ।**
**कुरुते महार्थसंहृतिमेतेषामेव विश्रान्त्यै ॥७०॥**

संसार में दुःखी इन सभी प्राणियों के विश्राम के लिये ही प्रभु कृपायुक्त हो महार्थों ( कालादि तत्त्वों ) का संहार किया करते हैं ॥ ७० ॥ ८ ॥

### तात्पर्यदीपिका

ननु तर्हि किं प्रलयेनेत्याशङ्क्याह—संसार इति ।

अनवरतम् उपजायमानशरीरेन्द्रियविषयसंपर्कजातसुखदुःखानुभवव्यापारसञ्जातश्रमाणां प्राणिनां विश्रान्त्यर्थं करुणानुन्नहृदयः प्रभुर्महार्थसंहारं करोतीति । तदुक्तम्—

"कार्यव्यासक्तचित्तानां विश्रान्त्यै रजनी यथा ।
संहारं भवखिन्नानां कृपया कुरुते शिवः ॥" इति ॥८॥

इति तत्त्वप्रकाशतात्पर्यदीपिकायां सामान्यवादः
पञ्चमः परिच्छेदः

### वृत्तिः

अथास्य महासंहारस्य प्रयोजनमाह संसार इति ॥ ७० ॥

---

१. सर्वेषां ।

कर्मविपाचनहेतोः[1] पशुदयया पुनरपीह परमेशः।
सृष्टिं विधाय तेषां कर्म विपाचयति[2] देहभृताम् ॥७१॥

पशुओं पर करुणा करके उनके कर्मों के परिपाक के लिये परमेश्वर पुनः उनकी रचना करके उन शरीरधारियों के कर्मों का पाचन करते हैं ॥७१॥१॥

## तात्पर्यदीपिका

## अथ षष्ठः परिच्छेदः

अथ तर्हि पुनः सर्गकारणमयुक्तं, विश्रामस्यैव पुरुषार्थत्वादित्याशङ्क्याह—कर्म इति।

अयमभिप्रायः—निःशेषदुःखनिवृत्तिनित्यनिरतिशयानन्दात्मकापवर्गविहीनान् पशुतयाऽनधिगतपुरुषार्थान् कर्मबद्धान् दयार्हान् पशूनवलोकयन् भगवान् भोगेन कर्मबन्धविनिवृत्तये तत्साधनदेहीन्द्रियविषयसृष्टिं विधत्ते। तेषां कर्मबन्धविनिवृत्तिश्च मोक्षार्थेति मोक्षार्था सृष्टिरुपपन्नेत्यर्थः ॥ १ ॥

## वृत्तिः

कर्मेति। विश्रमायाखिलात्मनां कर्मणां च पाकार्थम् उपलक्षणत्वादस्यानवरतमनन्तशरीरादिजननेनापचितशक्तेर्मायायाश्च सामर्थ्योत्पादनार्थं संहार इत्यर्थः। सृष्टिरपि मोक्षायेत्याह—पशुदययेति। कर्म विपाचयति विशेषेण पाचयति प्रागर्जितानि कर्माणि पाकक्रमेण कर्माथिं भोग्यतयोपस्थापयतीत्यर्थः ॥ ७१ ॥

भोगेन कर्मनाशं[3] विधाय दीक्षाख्यया[4] शक्त्या।
मोचयति पशूनखिलान् करुणैकनिधिः सदा शम्भुः ॥७२॥

भोग के द्वारा कर्मों का प्रणाश करके दया के एकमात्र निधि शिव सर्वदा दीक्षा नाम की शक्ति से सभी पशुओं को मुक्त कर देते हैं ॥७२ ॥ २ ॥

## तात्पर्यदीपिका

ननु केन तर्हि कर्मपाकः, कथं वा मोक्षसंभव इत्यत आह—भोगेन इति।

---

१. इतः। २. कर्माण्येवं पाचयति। ३. कर्मपाकं। ४. दीक्षां शिवः।

अयमाशयः—भोगेन कर्मणः पाकं विनाशं कुर्वन् भगवान् कालं प्रतीक्षमाणः कर्मसाम्ये सति शक्तिं मोचिकां पाचयित्वाऽऽचार्यो भूत्वा दीक्षां विधाय अपवर्गार्हान् पशून् अखिलान् सर्वदा सदा परमकारुणिकः शंभुर्मोचयतीति। ननु न मोक्षाख्यः पुरुषार्थोऽस्ति, नापि स्वर्गाख्यः, तयोः सद्भावे प्रमाणाभावात्। न चानुमानागमाभ्यां तयोः सद्भावसिद्धिः इति वाच्यम्। अनुमानागमयोः अप्रामाण्यात्। तत्रानुमानस्याप्रामाण्यं व्याप्तिग्रहणसापेक्षस्य अनुमानस्य तदसंभवात्। स च देशान्तरकालान्तरगततयाऽनध्यक्षयोः साध्यसाधनयोः, साहित्यनियमात्मकस्य अविनाभावस्य अध्यक्षतो ग्रहणासंभवात्। न चानुमानात् तदविनाभावग्रहणमिति वाच्यम्। अन्योन्याश्रयप्रसङ्गाद्, व्याप्तिग्रहणे सत्यनुमानप्रवृत्तिः, अनुमानप्रवृत्तौ व्याप्तिग्रहणमिति। न चानुमानान्तरेण व्याप्तिग्रहणम्। अनवस्थाप्रसङ्गात्। न चागमाद् व्याप्तिग्रहणम्। तस्य सन्दिग्धत्वात् तदनुपलम्भात् चेति। न चागृहीताविनाभावात् साधनात् साध्यसिद्धिरिति वाच्यम्, अतिप्रसङ्गात्। तस्मात् प्रत्यक्षमेव प्रमाणम्। तच्च स्वर्गापवर्गौ भावगमयतीति काम एव मुख्यः पुरुषार्थः, अर्थश्च तत्साधनत्वादिति। तदुक्तम् "वृत्तिसाध्या प्रीतिः पुरुषार्थः, स काम एव नान्यो मोक्षादिः, दृष्टहान्यदृष्टकल्पनाप्रसङ्गादिति"। तथा पृथिव्यप्तेजोवायव एव तत्त्वानि, शरीरेन्द्रियविषयाणां तत्समुदायरूपतया तत्त्वान्तराभावात्। न च ज्ञानं तत्त्वान्तरम्। तस्य रजनीचूर्णसम्बन्धाद् उपजायमानरागवद् भूतसमवायजन्यतया तद्धर्मत्वनिश्चयादिति चार्वाकः। तदयुक्तम्। अनुमानागमाप्रामाण्ये सन्दिग्धं विपर्यस्तं वा प्रतिपाद्यं प्रति प्रतिपादकस्य शब्दप्रयोगासंभवप्रसङ्गात्। तथा हि—अस्याज्ञानं सन्देहो विपर्यासो वा विद्यते इति प्रतिपाद्यशब्दादिना लिङ्गेनानुमाय मयोच्चारितेन शब्देनास्य यथार्थप्रतिपत्तिर्भविष्यति। सा तदज्ञानादिकं निर्णुदस्यतीत्याद्यनुमानपूर्वको हि परं प्रतिपाद्यं प्रति प्रतिपादकस्य शब्दप्रयोगः। अतत्पूर्वकत्वे शब्दप्रयोक्तुरुन्मत्तवदुपेक्षणीयताप्रसङ्गेन च परगताज्ञानसन्देहविपर्यासाः प्रत्यक्षतोऽवगन्तुं शक्यन्ते अतोऽनिच्छतापि चार्वाकेणानुमानस्य चागमस्य च प्रामाण्यम् अभ्युपेतव्यम्। शब्दस्य अप्रमासाधकत्वे प्रयोगासंभवप्रसङ्गात्। न च व्याप्तिग्रहेणासंभवाद् अनुमानाप्रामाण्यम्। सामान्योपग्राहकवशाद् अखिलव्यक्तिषु सम्बन्धग्रहणवत् तदुपपत्तेः। तथा हि—व्याप्तिग्रहणवेलायाम्

अल्पत्वादिविशेषं परित्यज्य धूमजातीयम् अग्निजातीयं न व्यभिचरति इति सामान्योपग्राहकवशाद् अजातातिवृत्तप्रत्युत्पन्नाखिलव्यक्तीनां तत्तज्जातीयतया तथा व्याप्तिग्रहणे, व्याप्तेर्गृहीतत्वान्न व्याप्तिग्रहणासंभव इति । सामान्ययोरेव व्याप्तिग्रहणम्, अधिकरणसिद्धान्तन्यायेन विशेषसिद्धेरिति । तदपास्तम् ।

"विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात् ।
तद्वतोऽनुपपन्नत्वाद् अनुमानकथा कुतः ।।" इति ।

यतो व्याप्तिग्रहणादिसंभवस्योक्तत्वात् । तथा भोजनादिसर्वक्रियासंभवश्च । तासामनुमानपूर्वकत्वात् । किञ्च, अवगताविनाभावस्य पुरुषस्य धूमदर्शनाद् अग्निज्ञानम् उपलभ्यते । तत् किंरूपमास्थेयम् न तावद्विपर्ययरूपम् । बाधकाभावात्, प्रत्यक्षसम्भवाच्च । नापि विकल्परूपम् । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इत्युक्तलक्षणाभावात् । नापि निद्रा । सुषुप्त्यभावात् । न च स्मृतिरूपम् । धूमादिसंभवसंस्कारमात्रजन्यत्वाभावाद् इदन्तया भासमानत्वात् तथाविधपूर्वानुभवाभावाच्चेति । नापि संशयरूपम् । अनवधारणज्ञानं संशय इत्युक्तसंशयलक्षणाभावात् तस्मादेतज्ज्ञानं प्रमाणमेव । न च तत् प्रत्यक्षम् । अर्थेन्द्रियसंप्रयोगाजन्यत्वात् । न चाग्नेरर्थस्य चक्षुरादिना सम्प्रयोगोऽस्ति, आवृतत्वाद् इत्यग्निज्ञानकारणधूमज्ञाननिष्पादनार्थं चक्षुर्विज्ञानम् अग्निज्ञानार्थम् । स्वर्गादिज्ञानकारणशब्दज्ञानार्थश्रोत्रव्यापारवदिति । न चानुमितानुमानादौ चक्षुराद्यपेक्षेति प्रमाणान्तरमेवानुमानाख्यमिति सिद्धम् अनुमानमिति । आगमप्रामाण्यं च पूर्वमुपवर्णितम् इत्यलमतिप्रसङ्गेन । तथा हि—शरीरेन्द्रियवृत्तिसङ्घातः परार्थः भोगसाधनं च जडत्वात्, जडं च कार्यत्वात्, गृहक्षेत्रादिवदिति भूतव्यतिरिक्तः पर आत्मा सिद्धः । तस्य नित्यत्वं, शरीरनाशेऽप्यविनाशात् । स च जातिस्मृत्यादिना अवगम्यते । तस्य मोक्षो बद्धत्वात् । अतो मोक्षस्य कादाचित्कतया कारणापेक्षा । कारणं च हिंसालक्षणधर्माधर्मसंयुताद्—

"अहिंस्यदेहाद्युद्भूतिर्मोक्षमाहुर्दिगम्बराः ।" इति ।

तथा हि—नित्यतायां ग्रहे अनित्यत्वे च द्वेष इत्युभयपरिहारार्थानेकान्तभावना । तथा हि—घटादिः मृदादिरूपेण नित्यः, सर्वावस्थासु उपलम्भात् । घटादिरूपतया अनित्यः, तदपायात् । एवं स्वदेशकालकारणाधारतया सत्त्वमर्थानामन्यदेशादिषु असत्त्वं, स्वकार्ये कर्तृत्वं कार्यान्तरे चाकर्तृत्वं, स्वशब्देनाभिधेयत्वम्, अन्यशब्देन अनभिधेयत्वम्

इत्याद्यूह्यम् अर्थानामनेकान्तत्वम् इति दिगम्बराः। तदिदमनुपपन्नम्। अनेकान्तभावनायां मिथ्यारूपतया अपवर्गसाधनत्वासंभवात्। तच्च स्वदेशादिषु सत्त्वादिनियतरूपस्य एवोपालम्भात्। तथा घटादेश्च कार्यस्य नित्यत्वात् मृदादेः कारणस्य च नियमेन नित्यत्वाच्च नोभयात्मकत्वम्। एवं स्वशब्देनाभिधेयत्वम् एवान्यशब्देन चाभिधेयत्वमेवेति नानेकान्तत्वमिति। या चेयमुभयरूपता प्रोक्ता तत्र विवादः। इतरेतराभ्युपगमेन अस्माभिरप्यभ्युपगतत्वात्। यदि च स्वदेशादिष्वप्यसत्त्वादिकं स्यात्, तदा स्यादर्थानामनेकान्तता। न च तदस्ति। तस्मान्नानेकान्तत्वम् अर्थानाम् इति मिथ्याभूतत्वान्नापवर्गकारणम् अनेकान्तज्ञानम् इति। न चानेकान्तताभावनावशाद् विशिष्टप्रदेशे अक्षयशरीरादिप्राप्तौ प्रमाणमस्ति। न च तेषाम् आगमः प्रमाणम्। तस्य प्रमाणमूलत्वाभावात्। न च प्रत्यक्षानुमाननित्यागमा मूलानामनित्यागमानुशब्दानां प्रामाण्यं संभवतीत्युक्तम्। न च शरीरेन्द्रियविषयाणां कार्याणां नित्यत्वं संभवति। अतिप्रसङ्गात् यच्च शरीरपरिमितस्यात्मनः शरीरनाशे नक्षत्रादिवद् अवस्थानं निःश्रेयसम् इत्यार्हतैकदेशीयैरुक्तं, तदपि न चतुरश्रम्। देहपरिमितस्यात्मनो देहवन्मूर्ततया अनित्यत्वप्रसङ्गात्। तथा गजशरीरावस्थितस्य मशकशरीरप्रवेशे मृदङ्गपिहितप्रदीपप्रभाया घटपिधान इव सङ्कोचविकासाश्रयणेन परिणामित्वप्रसङ्गः। तस्मात् रूपरसगन्धस्पर्शज्ञानात्मकेषु षट्पदार्थेषु यद् दुःखसमुदायनिरोधमार्गाख्यं पदार्थचतुष्कं तस्मिन् क्षणिकादिभावनापवर्गकारणं, शुद्धचित्तसन्तानोत्पत्तिरपवर्ग इति सौगताः। दुःखं रूपादिस्कन्धपञ्चकम्। तच्च रूपस्कन्धो वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्धो विज्ञानस्कन्धश्चेति स्कन्धपञ्चकम्। तत्र वर्णगन्धरसस्पर्शात्मना चतुर्विधो रूपस्कन्धः। सुखा वेदना दुःखा वेदना मध्यमा वेदनेति त्रिविधो वेदनास्कन्धः। चक्षुःसंज्ञा जिह्वासंज्ञा श्रोत्रसंज्ञा घ्राणसंज्ञा स्पर्शसंज्ञेति षट्प्रकारः संज्ञास्कन्धः। संस्कारस्कंधो द्विप्रकारः कुशलाकुशलभेदात्। तत्राकुशलो दशविधो मनोवाक्कायभेदैः। तत्र मानसा मिथ्यादर्शनाभिलाषप्रद्वेषास्त्रयः। वाचिका अनृतवचनपैशुन्यपरनिन्दा विप्रलम्भवचनानि चत्वारि। कायिका हिंसापरस्वहरणमैथुनयोगास्त्रयः इत्यकुशलाः। कुशलाश्च दश विपरीताः। एवं संस्कारस्कन्धो विंशतिप्रकारः। चक्षुर्विज्ञानं श्रोत्रविज्ञानं घ्राणविज्ञानं स्पर्शविज्ञानं जिह्वाविज्ञानं मनोविज्ञानं चेति षट्प्रकारो विज्ञानस्कन्धः। इत्येष दुःखकारणत्वात् दुःखमिश्रत्वात् सुखमपि दुःखम्। तस्य कारणं

समुदायः। तयोर्निरोधो विनाशः, तस्योपायो मार्गः। क्षणिकादिभावेनैष क्षणिकमिति भावनावशात् रागादिनिवृत्तिः। ममेदमिति सम्बन्धाभावात्। तथा निरात्मकभावनातश्च रागादिनिवृत्तिः, स्वपरसम्बन्धाभावात्। एवं सर्वं शून्यमिति भावनया रागादिनिवृत्तिः, असत्त्वात्। नहि गगनकुसुमवन्ध्यासुतादौ रागादिसम्भव इति शुद्धचित्तसन्तत्युद्भवोपपत्तिरिति वैभाषिकसौत्रान्तिकज्ञानाद्वैतवादिनो बौद्धाः शुद्धचित्तसन्ततेरपि विनाशोऽपवर्ग इति शून्यवादिनः। तदिदमनुपपन्नम्। क्षणिकादिभावनानां मिथ्यारूपतया निःश्रेयससाधनत्वासंभवात्। न च सर्वे भावाः क्षणिकसत्त्वाद् विज्ञानवद् इत्यनुमानात् पदार्थानां रूपरसगन्धस्पर्शविज्ञानानां क्षणिकत्वसिद्धेः क्षणिकत्वभावनाया न मिथ्यात्वमिति वाच्यम्। तस्याग्न्यनुष्णतासाधककृतकत्वानुमानवत् स एवायं घट इत्यादिप्रत्यक्षबाधया प्रामाण्यात्। न च स एवायं नखः, त एवामी केशा इत्यादिप्रत्यभिज्ञावद् अस्यापि न प्रामाण्यमिति वाच्यम्। अस्य बाधकाभावात्। न चानेनैवानुमानेनास्य बाध इति वाच्यम्। अनुमानस्य प्रत्यक्षमूलस्य स्वमूलबाधकत्वासम्भवात्। न चानुष्णतासाधकेनोष्णताग्राहिप्रत्यक्षं बाध्यत इति। तथा विज्ञानस्य त्रिक्षणस्थायितया क्षणिकत्वाभावात् साध्यविकलो दृष्टान्त इति। नन्वक्षणिकस्यार्थक्रियाकारित्वलक्षणसत्त्वासंभवादुपलभ्यमानं सत्त्वं पृथिव्यादिक्षणिकतां साधयेत्। तथा हि—क्षणिको यदि स निष्पाद्यं सर्वं युगपदेव करोति, न ह्युत्तरादिक्षणेष्वपि। तदेव सर्वं ज्ञायते तत्कारणस्य विद्यमानत्वात्। न हि कारणे सति कार्यानुत्पत्तिर्घटत इति। नापि क्रमेण। प्रथमक्षण एवोत्तरादिक्षणभाविनां कार्याणां कारणभूतस्यास्य सद्भावेन विलम्बनासंभवात्। न च सहकारिप्राप्त्यनुरूपेण कार्यजननमिति वाच्यम्। सहकारिणा क्रियमाणस्य कारणातिशयविनाशस्य वा कारणाद् भिन्नत्वे तदितरविश्ववदुपेक्ष्यत्वात्। तथानतिशयनिवृत्त्यतिशयाधानहेतुत्वे सहकार्यपेक्षकारणभिन्नत्वेऽतदुत्पत्तौ तदुत्पादप्रसङ्गः। अतिशयाधानानतिशयानिवर्तकत्वे तदितरविश्ववत् सहकारिणाम् अप्युपेक्ष्यत्वप्रसङ्ग इति। तस्मादर्थक्रियाकारित्वलक्षणसत्त्वविरहादसन्तोऽक्षणिका इति। अत्र प्रयोगः—यत् क्रमाक्रमाभ्यामजनकं तन्नास्ति यथा खरविषाणम्। क्रमाक्रमाभ्यामजनकाश्चाक्षणिका इति। तस्मात् पृथिव्यादिषु पक्षभूतेषूपलभ्यमानं सत्त्वं विपक्षे वृत्त्यसम्भवात् सपक्षाभावेऽपि क्षणिकत्वं साधयतीति। नैवम्। अक्षणिकानामपि क्रमाक्रमाभ्यां सहकारि-

प्राप्तौ तथैव जनकत्वोपपत्तेः । ननूक्तं सहकारिणातिशयाधानं तदनतिशयनिवृत्तिर्वेति विकल्पोक्तं सत्वादनुपपन्नमस्यैवातिशयत्वात् । यद् यस्य सद्भावे कार्यं करोति, स तस्यातिशय इति मृदादिकारणं चक्रादिसहकारिसमवधाने घटादिकार्यजनकमुपलब्धमिति तत् तदतिशय इति ॥ २ ॥

## वृत्तिः

ततश्च क्रमेण मलपरिपाके जाते सति । भोगेनेति—

मलपरिपाके सति कर्मणां युगपत्पाकात् दीक्षाख्यया स्वशक्त्या आचार्यव्यापाराभिव्यक्तया केवलया वा । युगपदनेकभोगभोजनात्मककर्मनाशं विधाय मलादिभ्यः पशून् मोचयतीत्यर्थः । यदुक्तं श्रीमत्किरणे—

'अनेकभविकं कर्म दग्धबीजमिवाणुभिः
भविष्यदपि संरुद्धं येनेदं तद्धि भोगदम् ।'

अत एव सद्यो निर्वाणदीक्षायामारब्धकार्यस्य वर्तमानशरीरारम्भकस्य कर्मणोऽपि क्षय इति सिद्धम् । दीक्षायाः च नैष्ठिक्यादिको भेदः श्रीमन्मतङ्गादेरववेयः ॥ ७२ ॥

**आप्रलयं यत्तिष्ठति[1] सर्वेषां भोगदायि भूतानाम् ।**
**तत्तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः ॥ ७३ ॥**

जो प्रलय-पर्यन्त विद्यमान रहता है और सभी भूतों के भोग का देने वाला है, वह 'तत्त्व' इस नाम से कहा गया है, इसलिये (उक्त लक्षण के अभाव में) शरीर, घट आदि 'तत्त्व' नहीं हैं ॥ ७३ ॥ ३ ॥

## तात्पर्यदीपिका

ननु न षट्त्रिंशत् तत्त्वानि इति शक्यते वक्तुं, शरीरघटादेरपि सद्भावादित्याशङ्क्याह—आप्रलयम् इति ।

अयमभिप्रायः—शरीरघटादेस्तत्त्वलक्षणाभावान्न तत्सद्भावेन तत्त्वाधिक्यम् । तथा हि—यद् आप्रलयावस्थायि सर्वभूतभोगकारणं तत्त्वमिति तत्त्वलक्षणं न शरीरघटादेः अस्ति । तद्देशतत्कालव्याप्त्यभावात् । तथा शरीरघटादीनां पृथिव्यादितत्त्ववृत्तिरूपतया बुद्धिवृत्तिरूपाध्यावसायादिवत् तत्त्वान्तरत्वासम्भवाच्च न तत्त्वाधिक्यमिति । तदुक्तं गुरुदेवाचार्येण—

१. तिष्ठति यत् ।

"ततत्वात् सन्ततत्वाच्च तत्त्वानीति ततो विदुः ।
ततत्वं देशतो व्याप्तिः सन्ततत्वं च कालतः ॥
लक्षादियोजनव्यापि तत्त्वमा प्रलयात् स्थितम् ।
अन्यथा स्तम्भकुम्भादिरपि तत्त्वं प्रसज्यते ॥" इति ॥३॥

**वृत्तिः**

यद्येवं शरीरादेः कथं न तत्त्वतया परिगणनमत आह—आ प्रलयमिति ।

अतः साक्षात्परम्परया भावभोगदायकमाप्रलयावस्थायि च यत् तत्तत्वमित्युक्तम् । अत एवास्माभिः संहारक्रमेण तत्त्वानि प्रदर्शितानि । यथा—

भूवार्यग्निमरुत्खगन्धरसरूपस्पर्शब्दान् भगं
पायूपादकरास्यनासिरसना दृक्त्वक्छ्रुतिर्मानिसम् ।
गर्वं धीगुणमत्ररागपुरुषान् विद्यानियत्यौ कला
कालं मोहकबोधकेश्वरसदेशच्छक्तिमोडे शिवम् ॥ इति ।

अत्र च रागपुरुषानिति क्रमवैपरीत्येन पुंसो नाध्वत्वमिति दर्शितम् ॥ अकृतस्य करणं कृतस्य परिवर्धनं च बुद्धिधर्म इति ।

**तत्त्वं यतो भवेत्[1] यत्कारणमापूरकं च तत्त्वस्य ।**
**कथिता व्यवस्थितिर्येन्[2] निखिलानामेव तत्त्वानाम् ॥७४॥**

तत्त्व जिससे उद्भूत होते हैं, जो तत्त्वों का कारण तथा आपूरक है, जो सभी तत्त्वों का आधार कहा गया है ॥ ७४ ॥ ४ ॥

**तात्पर्यदीपिका**

प्रतिज्ञातार्थमुपसंहरति—तत्त्वम् इति ।

अयमर्थः—शिवाद्यवनिपर्यन्तानां निखिलानां तत्त्वानां व्यवस्थितिः कथिता । तथा निखिलानां तत्त्वानाम् आपूरकम् आभीक्ष्ण्येन पूरकम् अध्वातीतं शिवाख्यं निष्कलं रूपं च कथितम् । "तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः । यतो भवति यत् तत्त्वं यत् कारणं चापूरकमुपकरणं वा, तच्च कथितमिति ॥ ४ ॥

**वृत्तिः**

अथ प्रकरणमुपसंहरति । कथिता व्यवस्थितिरिति ॥ ७४ ॥

---

१. भवति ततो । २. व्यवस्थितिरियं निखिलानामेव ।

तत्त्वानामपि तत्त्वं येनाखिलमेव लीलया कथितम् ।
श्रीभोजदेवनृपतिर्व्य[2]दधत्तत्त्वप्रकाशं सः ॥७५॥

( उसी ) तत्त्वों के भी तत्त्व ( परमकारण शिव ) का पूर्ण कथन जिसने अनायास ही कर दिया, उन्हीं श्रीभोजराज ने ( तत्त्वों के प्रकाशक ) 'तत्त्व-प्रकाश' ग्रन्थ की रचना की ॥ ७५ ॥ ५ ॥

## तात्पर्यदीपिका

शास्त्रस्वीकरणाय कर्तारं स्वात्मानमभिद्योतयति—तत्त्वानाम् इति ।

तत्त्वानामपि तत्त्वं स्वरूपं येनाखिलं कृत्स्नमेव हेलयाऽश्रमेण पूर्वं कथितं, स एव तत्त्वप्रकाशं व्यधत्त विभागेन कृतवानिति । नन्वाप्त-कृतत्वावबोधेन न शास्त्रस्वीकारः । शास्त्रस्वीकारस्य युक्तियुक्तावबोध-पूर्वकत्वात् ।

तदुक्तं भट्टाचार्येण—

"कणान् वा भक्षयेत् कामं माहिषाणि दधीनि वा ।
युक्तियुक्तनिबन्धश्चेत् तद्धि ग्राह्यं मनीषिभिः ॥" इति ।

नैतदेवम् । इतरेतराश्रयदोषप्रसङ्गात् । श्रवणे प्रवर्तमानस्य युक्ति-युक्तावबोधः, युक्तियुक्तावबोधे सत्येव श्रवणे प्रवृत्तिरिति । तस्मादाप्त-कृतत्वावबोध एवादौ श्रवणे प्रवृत्तिहेतुः । यथा हि मनुना प्रणीतं व्यासेन प्रणीतमित्यादिकर्तृबहुमानत्वात् प्रवृत्तिरिति युक्तं कर्तृसंकीर्तनमिति । अत्र निवृत्तिः कलाध्वा । तत्त्वाध्वा पृथिवी । भद्रकाल्यादिकालाग्न्यन्ता-न्यष्टोत्तरशतं भुवनाध्वा । क्षकारो वर्णाध्वा । लकारो वाष्टाविंशतिप-दानि पदाध्वा । सद्योजातहृदयाख्यौ मन्त्राध्वा । पदोद्धारं उच्यते—

"चतुर्वर्णं समुद्दिष्टं महादेवपदं हि यत् ।
सद्भावेश्वरसंज्ञं तु पञ्चार्णं मुनिसत्तम ॥
महातेज इति प्रोक्तं पदं वर्णचतुष्टयम् ।
पदं पञ्चार्णमुद्दिष्टं योगाधिपतिसंज्ञितम् ॥
मुञ्च मुञ्च चतुर्वर्णं षड्वर्णं प्रथमात्मकम् ।
शर्वशर्वपदं चात्र बोद्धव्यं चतुरक्षरम् ॥
भवयुग्मं तथा तद्वत् भवोद्भवपदं पुनः ।
पदमष्टाक्षरं चान्यत् सर्वभूतसुखप्रदम् ॥

१. हेलया । २. व्यधत्त ।

सर्वसान्निध्यपूर्वं तु करान्तं सप्तवर्णकम् ।
पदमष्टाक्षरं ब्रह्मविष्णुरुद्रपरं परम् ॥
अनचितं द्विरभ्यस्तमष्टार्णं पदमुच्यते ।
असंस्कृतपदं तद्वत् पूर्वस्थितपदं तथा ॥
साक्षिन् तुरुपदे तद्वच्चतुर्वर्णे द्विरुक्तितः ।
षट्पतङ्गपदे वर्णाश्चत्वारः पिङ्गसंज्ञके ॥
तद्वज्ज्ञानपदं शब्दसूक्ष्माख्ये चतुरक्षरे ।
द्वयक्षरं स्याच्छिवपदं तथा शर्वपदं विभोः ॥
त्र्यक्षरं सर्वदपदं प्रणवादि नमो नमः ।
पञ्चवर्णं शिवायेति त्र्यक्षरं समुदीरितम् ॥
नतियुग्मं पञ्चवर्णं सतारं पदमुत्तमम् ॥"[1] इति ।

ननु कुतः कथं कलानामुत्पत्तिः । शिवेच्छया बिन्दोरिति ब्रूमः । तदुक्तं गुरुदेवपद्धतौ—

"बिन्दोर्नादात्मकात् तस्माच्छिवेच्छातः प्रवर्तिताः ।
कला पञ्च निवृत्त्याद्या यासु विश्वं प्रतिष्ठितम् ॥
मन्त्राः पदैस्तानि वर्णैर्व्याप्तानीह समन्ततः ।
वर्णास्तु भुवनैर्व्याप्तास्तत्त्वैर्व्याप्तानि तानि च ॥
कलाभिस्तानि तत्त्वानि व्याप्तानीह कलाः क्रमात् ।
सदाशिवादिभूम्यन्तं शक्तितत्त्वं व्यवस्थितम् ॥
सदाशिवादिकं त्वेवं स्वकार्यं व्याप्य संस्थितम् ।
[चतुर्युगमहापादं पृथिवीतत्त्वकन्दरम् ॥
कालतत्त्वात्तनाभं तत् पञ्चाशद् भावकण्टकम् ।
मायातत्त्वबृहद्ग्रन्थि शुद्धविद्याब्जशोभितम् ॥
विद्येश्वरदलच्छन्नं शक्तिकेसरसंयुतम् ।
पीठमेवंविधं कल्प्यं मातृकाबीजसंभवम् ॥"] इति ।[2]
कलाध्वोक्ताङ्गसम्पूर्णो भुवनाध्वोक्तरोमधृक् ।
वर्णाध्वोक्तत्वचोपेतो मन्त्राध्वरुधिरान्वितः ॥

---

१. गुरुदेवपद्धति उत्तरार्ध ६।१००–१०८ ॥ में पाठ कुछ भिन्न है ।

२. ('चतुर्युग...संभवम्' किरणागम के श्लोक है, जो गुरुदेवपद्धति ५।११ के बाद उद्धृत हैं । )

पदाध्वोक्तशिरामांस-शुक्लमज्जास्थितत्त्वगः ॥
सदाशिवषडध्वात्मा तस्य प्राणः शिवः स्मृतः ।
परावरो महादेवो ध्याने सकलरूपभृक् ॥
निष्कलस्तदभावे तु अष्टत्रिंशत्कलात्मकः ।
आसनं मूर्तिरावाह्यमेतत् त्रितयमध्वनि ॥
व्याप्यव्यापकभावेन ज्ञात्वा यजनमारभेत् ।
आसनं शुद्धविद्यान्तं मूर्तिः शक्त्यन्तगोचरा ।
आवाह्यं शिवतत्त्वं स्यादेतच्छैवानुशासनम् ॥ इति ।

इति तत्त्वप्रकाशतात्पर्यदीपिकायां निवृत्त्याख्यः
॥ षष्ठः परिच्छेदः ॥

वृत्तिः

केनेदं प्रकरणमित्याह तत्त्वानामिति—

तत्त्वानां प्रकाशं ज्ञानं तत्त्वानां तत्त्वस्वरूपं येन कथितं ज्ञापितमित्यर्थः ॥ ७५ ॥

**यस्याखिलं करतलामलकक्रमेण**
**देवस्य विस्फुरति[1] चेतसि तत्त्वजातम् ।**
**श्रीभोजदेवनृपतिः स शिवागमार्थं**
**तत्त्वप्रकाशमसमानमिदं व्यधत्त ॥ ७६ ॥**

जिस महाराजा के हृदय में सकल तत्त्वसमूह करतल में स्थित आमलक समूह की भाँति अवभासित होते रहते हैं, उन्हीं श्री भोजराज ने शैव आगमों के प्रतिपाद्य विषयों वाले अद्वितीय 'तत्त्वप्रकाश' नामक ग्रन्थ को रचा ॥ ७६ ॥

तात्पर्यदीपिका

यस्याखिलं करतलामलकक्रमेण
देवस्य विस्फुरति चेतसि तत्त्वजातम् ।
श्रीभोजदेवनृपतिः स शिवागमार्थं
तत्त्वप्रकाशमसमानमिदं व्यधत्त ॥[2]
नमस्तस्मै भगवते भोजायाक्लिष्टकर्मणे ।
शिवाय शिवभक्ताय शिवैकाहितचेतसे ॥

---

१. विष्फुरति । २. श्रीकुमार इसे पुष्पिका मानते हैं ।

नमः सर्वजगज्जन्मस्थितिभङ्गैकहेतवे ।
सर्वदैकस्वभावाय शिवाय शिवदायिने ।।
तत्त्वप्रकाशव्याख्यानं भक्तिनिर्भरचेतसा ।
अविज्ञाय कृतं यत्तु सन्तस्तत् क्षन्तुमर्हथ ।।

इति भारद्वाजकुलालङ्करणभूतेन शङ्करसूनुना विधिविहितसोम-
रसास्वादनपरितोषिणा शिवाङ्घ्रिकमलद्वयासक्तमधुकराय-
माणमानसेन श्रीमता श्रीकुमारेण रचिता
तत्त्वप्रकाशतात्पर्यदीपिका परिपूर्णा ।

## वृत्तिः

तदेव प्रपञ्चयति—यस्येति ।

यः शास्त्रेषु शिवोदितेषु परमं व्याख्यातृभावं गतः
सामान्येषु पदादिकेषु च सुधी स्वाध्यायशिक्षोल्वणः ।
तेनाघोरशिवेन शैवतिलकैः सम्प्रार्थितेनादरात्
संक्षेपेण गुरूत्तमेन विवृतस्तत्त्वप्रकाशः स्फुटम् ।।

इति लक्षद्वयाध्यापकश्रीमदघोरशिवाचार्यविरचिता
तत्त्वप्रकाशवृत्तिः समाप्ता

# परिशिष्ट—१

## ( अकारादि क्रम से श्लोक-सूची )

| श्लोक | श्लो० संख्या | श्लोक | श्लोक संख्या |
| --- | --- | --- | --- |
| संसारे खिन्नानां | ७० | शब्दादीनां ग्रहणं | ५८ |
| सात्त्विकराजस | ५४ | शब्दादेर्गुण | ६६ |
| साधारणी च पुंसा | ३९ | शुद्धानि पञ्च | २१ |
| स्यात्त्रिविधोऽहंकारो | ५३ | शेषा भवन्ति | १३ |
| शक्तय इहास्य | ३८ | शैवागमेषु मुख्यं | ५ |
| शक्तो यया स शम्भुः | ३ | | |

## परिशिष्ट–२

### ( तात्पर्यदीपिका में उद्धृत ग्रन्थों के नाम )

| ग्रन्थनाम | आवृत्ति | ग्रन्थनाम | आवृत्ति |
| --- | --- | --- | --- |
| अथर्वशिख | १ | भुवनेश्वरीकल्पः | १ |
| अथर्वशिरः | १ | भूतशुद्धितन्त्रम् | १ |
| अध्वसिद्धिः | १ | मानवम् | १ |
| आगमः | २ | मोक्षधर्मः | १ |
| आरणम् | १ | रौद्रसूक्तम् | १ |
| ईशावास्यम् | १ | लिङ्गोद्भवः | १ |
| ईश्वरगीता | ५ | लैङ्गम् | ७ |
| ऐतरेयोपनिषद् | १ | लैङ्गोपरिभागः | १ |
| किरणम् | ७ | वायवीयम् | ७ |
| कौर्मम् | १ | विष्णुपुराणम् | २ |
| गुरुदेवपद्धति | २ | वैशेषिकभाष्यम् | १ |
| चन्द्रज्ञानम् | ३ | शतरुद्रीयम् | १ |
| तैत्तिरीयम् | १ | शिवधर्मोत्तरम् | ५ |
| त्रैयम्बकाध्यायः | १ | शिवसूत्रम् | १ |
| देवीमन्त्रकल्पः | १ | शैवरहस्यम् | १२ |
| नीलरुद्रसूक्तम् | २ | शैवागमः | ३ |
| न्यायसूत्रम् | १ | श्रुतिः | १६ |
| पारमेश्वरम् | १२ | श्वेताश्वतराम् | ७ |
| पुराणागमः | २ | सनत्सुजातम् | १ |
| प्रयोगमञ्जरी | १ | सिद्धान्तहृदयम् | १ |
| बृंहणी | १ | सिद्धान्तागमः | १ |
| बृहदारण्यकम् | १ | स्मृतिः | ८ |
| भारतम् | १ | | |

## परिशिष्ट—३

( तात्पर्यदीपिका में उल्लिखित ग्रन्थकार )

| ग्रन्थकार | आवृत्ति संख्या | ग्रन्थकार | आवृत्ति संख्या |
|---|---|---|---|
| अगस्त्यः | १ | मातङ्गः | ७ |
| अवधूतपादः | १ | मार्कण्डेयः | १ |
| आर्याकारः | १ | रामः | १ |
| गुरुदेवाचार्यः | १ | वेदव्यासः | ६ |
| दधीच | १ | वैशेषिक | १ |
| न्यायविदः | ४ | शतककारः | १ |
| पतञ्जलिः | १ | शिवः ( सूत्रकर्ता ) | १ |
| बादरायणः | १ | शिवसूत्रवार्तिककृत् | १ |
| भगवान् विष्णुः | १ | शैवाः | १ |
| भट्टपादः | २ | सांख्याः | ४ |
| मनुः | १ | सांख्याचार्याः | ५ |

## परिशिष्ट—४

( अघोरशिवाचार्य की वृत्ति में उल्लिखित ग्रन्थ, ग्रन्थकार तथा मत )

अस्माभिः ( अघोरशिवाचार्यैः )
कामिकाद्यष्टाविंशतितन्त्राणि
कालोत्तरतन्त्रम्
किरणागमः
क्षपणकादयः
तत्त्वसंग्रहः
पराख्यतन्त्रम्
प्रवाहेश्वरपक्षः
पौष्करागमः
बौद्धः
मृगेन्द्रागमः
मृगेन्द्रवृत्तिदीपिका
रामकण्ठः
रौरवागमः
वेदान्तवादिनः
वैशेषिकादिः
श्रुतिः
स्वायंभुवः
सांख्यैः
सिद्धगुरुः
सिद्धान्तशास्त्रम्

## परिशिष्ट—८

(टीकाद्वयोद्धृतसंदर्भसूची)

तत्बाह्ये स्फटिकसन्निभं ... ... आगमः
" " ... ... ... भवेन्माया "
तद्बाह्ये रागतत्त्वं ... ... ... आगमः
तद्रागविद्ये च कलां ... ... अघोरशिवः
तद्वपुः पञ्चभिः ... ... ... ... आगमः
तदूर्ध्वं वैन्दवं ... ... ... ... "
तदेकसजमव्ययं ... ... ... ... श्रुतिः ?
तदेतदक्षयं ... ... ...विष्णुपु० १।२२।६०
तन्मात्राणीह ... ... ... ... मृगेन्द्रे
तन्नुद्दिह यः ... ... ... ... श्रुतिः ?
तस्मात् तत्संयोगात् ... सांख्यका० ।२०।
तस्मै नूनमभिद्यवे ... ... ... आगमः
नमः शक्त्यधिकारस्य ... ... मृगेन्द्रे
महावाक्यो. ।३।
तमेवं विद्वान् अमृत ...नृ. पू. उ. १।६॥
तरति शोकमात्मवित् छा. उ. ।७।१।३।
तामसतो ... ... ... ... ...स्मृतिः
तासां माहेश्वरी शक्तिः ... ... मृगेन्द्रे
त्रिगुणमविवेकि ... ... सांख्यका. ।११।
त्रिविधास्ते च विज्ञान ...सिद्धान्तहृदये
तेजस्तत्त्वं ... ... ... ... आगमः
तेनेदं पूर्णं पुरुषेण ... ... श्वेता. ३।९
तैजसानि शरीराणि ... ... आगमः
दृष्टमनुमान ... ... सांख्यका. ।४-६।
द्वयोरप्यध्वनो ... ... ... आगमः
द्यावाभूमी जनयन् ... ... श्वे. उ. ३।३।
द्विधा कृत्वात्मनो ... मनुस्मृतिः ।१।३२।
द्वे विद्ये वेदितव्ये ...मुण्ड० उ. ।१।१।४॥
धर्मेणगमनमूर्ध्वं ... सांख्यका० ।४४-५।
न च पुनरावर्तते ... छां. उ. ८।१५।१॥
न च स्त्री न पुमानेष ... वायवीये ५।४८
न तं विदाथ य इमा ... ... श्रुतिः ?
न चाशरीरिकर्तृत्वं ... ... आगमः
न शंखेन पिवेत्तोयम् ... ... श्रुतिः
न ईशानमूर्ध्न ... ... ... " ?
न वा ओजीयो रुद्र ... ... ...
नात्र शक्तिरुपादानं ... ... आगमः
नाधिकां न च हीनां ... ... ... लैङ्गे
नान्यः पन्था अयनाय ... श्वे. उ. ३।८

नाभुक्तं क्षीयते कर्म ... ... ... स्मृतिः
नायं पृथिवी न सलिलं ... ... स्मृतिः
नासतो विद्यते ... ... गीता २।१६
निग्रहोऽपि स्वरूपेण ... ... वायवीये
निमित्तकारणं त्वीशः ... ... मातंगे
निमित्तमीश्वरस्तेषां ... ... पराख्ये
निश्चिते तद्कर्तृत्वे ... ... ... आगमः
निधीशो रूपवान् ...गुरुदेवपद्धति.
उत्तरा. १७।८०–२
निष्कलं निष्क्रियं शान्तं ...श्वेता.उ.।६।१९।
नैव स्त्री न पुमानेष ...श्वेता. उ. ।५।१०।
पञ्चमन्त्रतनुः श्रीमान् ... ... पारमेश्वरे
पञ्चवक्त्रः त्रिपञ्चदृक् ... ... आगमः
पत्युः शक्तिः परासूक्ष्म ... ... मातङ्गे
पत्यौ शिवस्वभावा ... ... शैवरहस्ये
पञ्चावयवयुक्तस्य ... ... ... व्यासः
परस्त्रिकालादकलो ... ...श्वे. उ. ।६।५।
परापरव्यतिकरः ... ... वैशेषिक
परोपदेशानपेक्षं ... ... न्यायवाक्यम्
परोऽपि न शरीरस्य ... ... आगमः
पशुः पशुत्वसंयोगात् ... ... श्रुतिः ?
पशुपाशपतिज्ञान ... ... ... किरणे
पश्यन्ति ऋषयो मुक्ताः ...ईश्वरगीता
॥२।५०॥
पार्थिवमन्तिमं तत्त्व ... ... शैवरहस्ये
पाशास्त्रयो निगलयन्ति ... प्रयोगमञ्जरी
पाश्यः पाशयिता पाशाः ... पारमेश्वरे
पुत्रे जातेऽष्टका ... ... ... श्रुतिः ?
पुरुष एवेदं सर्व ... श्वेता. उ. ॥३।१५॥
पुरुषो वै रुद्रः ... महानारा. ॥१०।११॥
पुल्लिङ्गमखिलं देव ... ... ... लैङ्गे
पूर्वासिद्धेनदेहेन ... ... ... आगमः
पृथिवीतत्त्वमाक्रम्य ... ... चन्द्रज्ञाने
प्रकृतिःपुरुषश्चैव ... ... ... आगमः
प्रतिपत्त्यागतान् ... ... ... पारमेश्वरे
प्रधानादभवद् बुद्धि ...शिवधर्मोत्तरे
प्रजायसे जनयसि ... ... ... स्मृतिः
प्रज्ञानं ब्रह्म ... ... ... ऐत. उ. ।५।३।
प्रमाता ... ... ... ... ...: ?

वामादिशक्तिभिर्युक्तः ... ... रौरवे
व्योम्नोऽवकाशदानं ... ... ... आगमः
विचारतस्तु रुद्रस्य ... ... स्मृतिः
विज्ञानकलसंज्ञः ... ... ... शैवरहस्ये
विज्ञानकलसंज्ञान् ... ... आगमः
विज्ञानमानन्दं ब्रह्म ... बृहदा. उ. ३।९।२८।
विज्ञानानां यथार्थत्वं ... न्यायवाक्यम्
विज्ञानयोगसंन्यासैः ... ... आगमः
विद्यातत्त्वं परं ... ... ... ... „
विद्यया विन्दतेऽमृतम् ... केनोप० २।४।
विद्येयं सर्वभावानां ... ... आगमः
विद्येश्वरान् करोत्यष्टौ ... सिद्धान्तहृदये
विधिवाक्यमिदं ... शिवधर्मोत्तरे १।१३७॥
विन्दोर्नादात्मकात् ... गुरुदेवपद्धतौ उत्तरा. १७।१३७॥
विपर्ययो मिथ्याज्ञानं ... योगसू० ।१।८॥
विभोरपि मलस्यास्य ... ... किरणे
विवादाध्यासितं विश्वं ... ... आगमः
विषोविषधरो } गुरुदेवपद्धतौ उत्तरा.
वृषो वृषधरो } १७।१८३॥
विष्णोःस्वरूपात् ... विष्णुपु० ॥१।२।२४॥
विशेषेऽनुगमः ... ... ... अज्ञातम्
विश्वं भूतं भुवनं चित्रं ... भस्मजा० २।५॥
विश्वतश्चक्षुः ... ... ... आगमः
वेदाहमेतं पुरुषं ... ... श्वेता. उ. ३।७
वैश्वानरं द्वादश ... ... श्रुतिः ?
स इज्ज्योतिः स ... ... ... लिङ्गपु.
स इमॉल्लोकानसृजत ... ऐते. उ. १।१।२।९
स एव मूलप्रकृतिः ... ईश्वरगीता ७।२१
स कर्तृकेष्वनु ... ... ... आगमः
सत्यं ज्ञानमनन्तं ... तै. उ. २।१।१॥
सर्वं धर्मत्रिधा ... ... ... पारमेश्वरे
सत्त्वं लघु प्रकाशक ... सांख्यका. ॥१३॥
सत्त्वे न भ्रान्तिबाधौ ... ... आगमः
सदाशिवाख्यं विमलं ... ... चन्द्रज्ञाने
सदेव सोम्येदमग्र ... छां. उ. ६।२।१
समे कर्मणि सञ्जाते ... ... आगमः
सम्बन्धप्रतिभासो ... ... शैवरहस्ये
सम्यग्ज्ञानाधिगमाद् ... सांख्यका० ६७।
सविद्युतां विदधतां ... न्यायवाक्यम्
संक्षुब्धाद् ... ... ... पारमेश्वरे
संरम्भाद्यस्य चेष्टन्ते ... ... आगमः
संरम्भोऽहंकृते ... ... ... ... „
संसारहेतुः संसारो ... ... ... स्मृतिः
सर्गकाले च करोति ... ... स्मृतिः
सर्वगः पुरुषः परः ... ईश्वरगीता ?
सर्वज्ञः सर्वकर्तृत्वाद् ... ... आगमः
सर्वत्रविहितो धर्मः ... ... मोक्षधर्मे
सर्वविकल्पविहीन ... ... शतककारः
सर्वस्मादधिकं ... ... ... लिङ्गपु.
सर्वस्यैव हि शास्त्रस्य ... श्लोक.वा० १।१२।
सर्वं प्रत्युपभोग ... ... सांख्यका० ।३७।
सर्वाननशिरोग्रीवः ... श्वे. उ. ३।११।
सर्वेन्द्रियेभ्यः ... ... ... स्मृतिः
सर्वेषुकालेषु ... ... प. हं. उ.प. ।७।
सर्वो रुद्रस्तस्मै रुद्राय ... नीलरुद्रः
सर्वो वै रुद्रः ... महाना. उ. ॥१३।२॥
सर्वो ह्येष रुद्रः ... शिव. सं. ३१ महाना. १०।१॥
सहजमनादिमलं ... ... शैवरहस्ये
सहजा कालिमा ताम्रे ... ... आगमः
स हि सर्वेषु भूतेषु ... ... स्मृतिः
सा च कुण्डलिनी शम्भो ... आगमः
सा प्रतिष्ठा तदमृतं ... सनत्सुजातीये
सात्त्विक एकादशकः ... सांख्यका. ।२५।
साधकस्य तु लक्ष्यार्थं ... ... पौष्करे
साम्प्रतकालं ... ... सांख्यका. ॥३३॥
सुखदुःखमोह ... ... ... शैवरहस्ये
सृष्टिसंरक्षणादान ... ... ... रौरवे
सौवर्णं पृथिवी ... ... ... चन्द्रज्ञाने
स्वराः षोडशवर्णाध्वा ... ... आगमः
स्वाप्येऽप्यस्ति ... ... ... मृगेन्द्रे
स्वालक्षण्या ... ... सांख्यका० २९।
सिसृक्षोराद्य ... ... ... सिद्धान्तहृदये
शक्तयः सर्वभावानां ... ... भट्टपादः
शक्तिर्नाचेतना चितः ... ... आगमः
शक्तेर्नादो भवेद्बिन्दुः ... ... ... „
शब्दज्ञानानुपाती ... योगसूत्रम् ॥१।९॥

---

# परिशिष्ट-६

## पारिभाषिक शब्दकोश

**अध्व** = मार्ग, सर्गक्रम, शुद्ध तथा अशुद्ध दो प्रकार, शिवतत्त्व से माया के पूर्व तक शुद्धाध्व, माया से पृथ्वी पर्यन्त अशुद्धाध्व।

**अनुग्रह** = ईश्वरीय कृपा, पाशों के तिरोधान से पशुओं को भोग-मोक्ष प्रदान करना, यथाधिकार ज्ञान,क्रिया, अणिमा आदि से युक्त करना, विश्वोत्पत्ति हेतु समस्त शक्तियों का स्पन्दन।

**अणु** = पशु, जीव, कर्तृत्व आदि में अत्यन्त सीमित।

**अपौरुषेयता** = मानव अथवा मानवेतर व्यक्ति के द्वारा पवित्र ग्रन्थों के न रचे जाने का सिद्धान्त।

**अर्थपञ्चक** = पाश। बिन्दु, कर्म, माया, मल और रोधशक्ति। अथवा पृथिवी आदि पाँच तत्त्व।

**अविशेष** = सूक्ष्मरूप, तन्मात्र, भूतों की वह अवस्था जिसमें उनके गुण पृथक् रूप में प्रकट नहीं होते।

**अशुद्धाध्व** = माया से लेकर पृथ्वीपर्यन्त तत्त्व। मायाशबल होने से अशुद्ध कहे जाते हैं। इनकी रचना अनन्त आदि के द्वारा। इसी को 'असिताध्व' भी कहते हैं।

**आवरण** = मलरोध, विषयों के वास्तविक रूप का प्रकाशित न होना।

**ईश्वरतत्त्व** = शुद्धाध्व का आदि से चतुर्थ तत्त्व। इसमें ज्ञानशक्ति किञ्चित् न्यून तथा क्रिया शक्ति अपेक्षाकृत अधिक स्फुट। देखें कारिका २९।

**ईश्वरवाद** = प्रकृति, स्वभाव आदि से भिन्न ईश्वर के अस्तित्व, स्वरूप, जगत्कारणता आदि से सम्बद्ध सिद्धान्त।

**उन्मेष** = आंख खोलना, सृष्टि हेतु शिव का आदि स्फुरण-परिणाम।

**उपादानकारण** = जिस पदार्थ से निर्माण होता है, शुद्धाध्व का बिन्दु अथवा महामाया उपादान कारण है और अशुद्धाध्व में माया।

करण=सामान्यतः दश इन्द्रियाँ बाह्यकरण और बुद्धि, अहंकार तथा मन अन्तःकरण, दो प्रकार के, किन्तु जगत्सृष्टि में निमित्त कारण शिव और करण शक्ति है।

कर्मसाम्य=साधक की वह अवस्था जब वह शुभ तथा अशुभ दोनों प्रकार के कर्मों के प्रति समान रूप से अनासक्त हो जाता है और उनका सत्फल या दुष्फल उसे भोगना नहीं पड़ता।

कर्मविपाक=कर्मों का पकना, पूर्वकृत कर्मों के फलभोग के लिये विषयों का भोग्यरूप में उपस्थापन का प्रारम्भ।

कालतत्त्व=पञ्चकन्चुकों में प्रथम, अशुद्धाध्व का प्रथम तत्त्व।

घृतकीटन्याय=एक देशीय परिणाम, जिस प्रकार प्रचुर घृत में उसके एक अंश में विकार आकर कीट उत्पन्न करता है, उसी प्रकार सर्वात्मना न होकर एकदेशीय परिणाम का सिद्धान्त।

क्षीरदधिन्याय=सर्वात्मना परिणति, जिस प्रकार पूरा का पूरा दूध परिणत होकर दही का रूप ले लेता है, उसी प्रकार सर्वात्मना किसी कारण का कार्य-विशेष में परिणत होने का सिद्धान्त।

चित्=चैतन्य, किन्तु यहाँ इसका अर्थ है ज्ञान और क्रिया शक्ति।

चिद्घन=ज्ञान और क्रिया की एकत्रस्थिति वाला, ज्ञान और क्रिया हैं शरीर जिसके।

तत्त्व=पदार्थ, प्रलय-पर्यन्त अवस्थित रहने वाले पदार्थ। सामान्यतः सिद्धान्त शैव-दर्शन में मात्र तीन—पति, पाश और पशु-तत्त्व हैं, विशेषतः छत्तीस—शिव से लेकर पृथ्वीपर्यन्त।

तत्त्वत्रय=पशु, पाश और पति ये तीन। सिद्धान्तदर्शन का सद्योज्योतिरचित एक प्रकरणग्रन्थ।

तिरोधान या तिरोभाव=छिपाना, पशुओं को पति के वास्तविक स्वरूप-ज्ञान से वञ्चित रखना, पाश द्वारा अनुग्रह करके आत्माओं को यथोचित भोग प्रदान करना। पञ्चकृत्यों में एक।

तैजस=राजस अथवा रजोगुण से उत्पन्न।

दीक्षा=गुरु के माध्यम से पशु के कल्याणार्थ होने वाला शिव का व्यापार, मलनिवृत्ति का अपरिहार्य प्रधानतम साधन। नयन, स्पर्श, वाचिक, शास्त्र, मानस, योग तथा होतृ नाम से सात प्रकार की।

नित्य=अनादि एवं अनन्त, शाश्वत, त्रिकालाबाधित, न कि क्षणिक।

निमित्तकारण=जगत्सृष्टि के निमित्तकारण शिव है, शुद्धाध्व में स्वयं, अशुद्धाध्व में 'अनन्त' के रूप में।

नियति=अशुद्धाध्व में माया से उत्पन्न द्वितीय तत्त्व, काल के पश्चात् उत्पन्न होने वाला तत्त्व, पञ्चकन्चुकों में द्वितीय, जगत् का नियन्त्रण करने वाला तत्व।

पक्वमल=जिनके मल पक चुके हैं, जिनके मलों का दोष समाप्तप्राय है, विद्येश, ये आठ हैं=अनन्त, सूक्ष्म, शिवोत्तम, एकनेत्र, एकरुद्र, त्रिमूर्ति, श्रीकण्ठ और शिखण्डी। ये पन्चकृत्य के अधिकारी हैं तथा ईश्वरतत्त्व के निवासी हैं।

पञ्चकञ्चुक=पाँच आवरण जिनसे माया कर्तृत्व आदि में न्यूनता लाती है, कला, काल, नियति, विद्या, और राग।

पञ्चकृत्य = शिव के पाँच कार्य—सृष्टि, स्थिति, संहार, तिरोधान, अनुग्रह।

पञ्चमन्त्रतनु = पाँच मन्त्र हैं शरीर जिसके वह शिव। ईशान, तत्पुरुष, अघोर, वामदेव और सद्योजात ये शिव के शरीर हैं जो मन्त्रात्मक हैं और पञ्चकृत्योपयोगी हैं। नाद, विन्दु, पद, वर्ण, वाक्य इन पाँच रूपों वाले मन्त्र जिसके शरीर हैं। अथवा पञ्चाक्षर मन्त्र-स्वरूप। अथवा ओंकार और चतुर्वेद इन पञ्चमन्त्र-रूपों वाला। द्रष्टव्य श्रीकुमार की छठीं कारिका की टीका।

पति = शिव, शिव सदृश शिवत्वयुक्त मन्त्र, मन्त्रेश, मन्त्रमहेश्वर, मुक्तात्मा आदि तथा शिवत्वप्राप्ति के साधन दीक्षा आदि भी।

परतःप्रामाण्य = ज्ञानग्राहक तथा उसकी प्रामाण्यग्राहक सामग्री के भिन्न-भिन्न होने का मत।

परिग्रह-शक्ति = माया तथा शिवतत्त्व का सम्बन्ध जिससे शिव की उपस्थिति मात्र से माया से उत्पत्ति का क्रम प्रारम्भ होता है।

पशु = पाशवद्ध, सभी स्थावर तथा जङ्गम, जड़ एवं चेतन। अणु। पशुत्वयुक्त विज्ञानकल आदि वद्धात्मा।

पशुभेद = पशुओं का प्रकार, तीन प्रकार—विज्ञानकल, प्रलयकल, सकल।

पाश = तीनों प्रकार के मल। अर्थपञ्चक। विन्दु और माया से उत्पन्न शुद्ध तथा अशुद्ध रूप वाले तत्व, भुवन, भूत, भाव सब पाशशब्द वाच्य हैं।

पुर्यष्टक = आठ अवयवों वाला शरीर, सर्ग से लेकर कल्पान्त या मोक्ष तक रहने वाला सूक्ष्मदेह। पृथ्वीतत्त्व से लेकर कलातत्त्वपर्यन्त तीस तत्त्वों का शरीर जिसका वर्गीकरण आठ रूपों में हो जाता है। देखें १२ वीं कारिका तथा टीकायें।

पुरुष = पुमान्, पशु, जीव, पञ्चकञ्चुकावेष्टित।

प्रभु = स्वयंसमर्थ, दूसरों का प्रेर्य नहीं। स्वयं कर्तृत्वादियुक्त।

प्रलयकेवल या प्रलयाकल = मल तथा कर्म नामक दो मलों से बद्ध पशु।

प्रवाहेश्वर पक्ष = बौद्धों का आत्मविषयक वह मत जिसमें चेतना के प्रवाह को ही ईश्वर अथवा आत्मा के स्थान पर स्वीकार किया जाता है।

प्रसाद = अनुग्रह, कृपा। शिव का वह व्यापार जिसे प्राप्त कर पशु मुक्त होता है अथवा दिव्यभोगों को प्राप्त करता है।

प्रामाण्यवाद = अभीष्ट प्रमाणों से प्राप्त ज्ञान की यथार्थता अथवा ज्ञानग्राहक और प्रामाण्यग्राहक सामग्री से सम्बद्ध मतवाद।

विन्दु = शुद्धाध्व का प्रधान उपादान, महामाया।

बुद्ध्यक्ष = बुद्धीन्द्रिय अर्थात् ज्ञानेन्द्रिय।

वैन्दव शरीर = विन्दुदेह, परमशिव का महामाया स्वरूप, शिवतत्त्व।

भूतादि = तामस या तमोगुण से उत्पन्न भूत आदि।

मन्त्रेश या मन्त्रेश्वर = वे पक्वमल सकल जिनको शिव ही मन्त्रेशपद पर नियुक्त करते हैं, इनकी संख्या एक सौ अठारह है—८ मण्डली + ८ क्रोधादि + वीरेश + श्रीकण्ठ + १०० रुद्र = ११८ मन्त्रेश।

मण्डली = कलामस्तकस्थ गहनेश आदि आठ प्रमाता मण्डली कहे जाते हैं। मन्त्रेशों में आठ।

